# अमरकोश प्रथम काण्डः

امرکوس خورد

अमरसिंह रचितः

श्रीयुत मुन्शी नवलकिशोरस्येच्छया

स्वीय नामक पाषाण यन्त्रालये

प्रत्येक वस्तु नाम लेखन पूर्व्वक पदच्छेदं

कारयित्वा पण्डित महेश दत्त प्रबन्धेन

लक्ष्मण पुरे मुद्राङ्किता मापितः

मार्च सन् १८७८ ई०

पिनाकोऽजगवन्धनुः क्वचिद्विशेषेण पदे स्थे नापि रूपभेदेन स्त्रीपुं
नपुंसकं ज्ञेयं यथा तत्पर्यो हनुः अत्र तत् पर इति विशेषणाद्धनोः पुं
स्त्वं सेवाल्या कुलथः पुमान् सेवुन्ना कुला स्त्रीत्वं नियत लिंगेना नेन॰
र्थं साह चर्य्ये रूप भेदाभावे पि क्वचित्ते नापि लिंगं ज्ञेयं यथा अश्वयुग॰
श्वनी भाव: करो विपाहि सुपदं अत्रा अश्वयुग भानुः विपत्ति साहचर्यात्स्त्री
पुंन पुंसकानि ज्ञेयानि क्वचित्तस्य स्त्रीपुंन पुंसकस्य विशेषो पादानात्तत्र
ज्ञेयं यथा भेरी स्त्री दुंदुभिः पुमान् रोचिः शोचिरुभे क्लीबे ॥ ४ ॥

श्रीगणेशाय नमः

यस्य ज्ञान दया सिंधो रगाधस्यानं घो गुणाः ॥ सेव्यतां म

चद्वयं उभयपदप्राधान्यद्योतनाय

क्षयो धीराः सश्रिये चां मृता यच ॥ १ ॥ समा हृत्यां॰
न्य तंत्राणि संक्षिप्तैः प्रति संस्कृतैः ॥ संपूर्ण मुच्यते व

मया                                                                  प्रायशो बाहुल्येन रूपभेदमाश्राय

र्गै र्नाम लिंगानु शासनम् ॥ २ ॥ प्रायशो रूप भेदेन॰

विंद रूपेण स्त्रीपुं

साह चर्या च्च कुत्र चित् ॥ स्त्री पुंन पुंसकं ज्ञेयं तद्विशे
ष विधेः क्वचित् ॥ ३ ॥ भेदा ख्यानाय नद्वंद्वो नैक शे-
षोन संकरः ॥ कृतोत्र भिन्न लिंगानां मनुक्तानां क्रमा

त्त

हते ॥ ४ ॥ त्रिलिंग्यां त्रिष्विति पदं मिथुने तु द्वयो रि॰

किन्तु त्रिष्वन्वयी

ति ॥ निषिद्ध लिंगं शेषार्थं त्वंताथा दिन पूर्व भाक् ॥
॥ ५ ॥ स्व रव्ययं स्वर्ग नाक त्रि दिव त्रिदशा लयाः

स्वर्गनाम

॥ सुर लोको द्यो दिवौ द्वे स्त्रियां क्लीबे त्रि विष्टपं ॥ ६

नाम:
अमरा निर्ज्जरा देवा स्त्रिदशा विबुधास्सुरा: ॥ सु-
नाम: नाम:
पर्वाणा: सुमनस स्त्रिदिवेशा दिवौकस: ॥ ७ ॥ आ
दि तेया द्दिविषदो लेखा अदिति नंदना:॥ आदि-
मरुवन्नोयेपांनि नाम:
त्या ऋ भवों स्वप्ना अमर्त्या अमृतां धस: ॥ ८ ॥ ब
र्हि र्मुखा: क्रतुभुजो गीर्वाणा: दान वारय: ॥ वृंदार
देवता नाम
का देव तानि पुंसि वा देवता स्त्रियाम् ॥ ९ ॥ आदि-
गण देवतोनामानि
त्यो विश्व वसव स्तुषिता भास्वरा निला: ॥ महारा-
देवयोनिना
जिक साध्याश्च रुद्राश्च गणा देवता: ॥ १० ॥ विद्याध-
मानि
रोप्सरो यक्ष रक्षो गंधर्व किन्नरा: ॥ पिशाचो गु-
भूवनाम दैत्यनामानि
ह्यक: सिद्धों भूतों मी देवयो नय: ॥ ११ ॥ असुरा दै
त्य दैत्येय दनुजे द्रारि दानवा: ॥ शुक्र शिष्या दिति
बुद्धस्य नाम
सुता: पूर्व देवा: सुरद्विष: ॥ १२ ॥ सर्वज्ञ: सुगतो बु
द्धों धर्मराज स्तथा गत: ॥ सुमंत भद्रो भगवान् मा
मार जिल्लोक जि ज्जिन: ॥ १३ ॥ षड भिज्ञों दश ब-
लों द्वय वादी विनायक: ॥ मुनींद्र: श्रीघन: शास्ता
शाक्यसिंह नाम
मुनि: शाक्य मुनि स्तुय: ॥ १४ ॥ सशाक्य सिंह: सर्वा
र्थ सिद्ध: शौद्धो दनिं श्रस: ॥ गौतम स्वार्क बंधुश्र-

*ब्रह्मा नाम

माया देवी सुत स्त्रसः ॥ १५ ॥ ब्रह्मात्मभूः सुर ज्येष्ठः परमेष्ठी पितामहः ॥ हिरण्य गर्भो लोकेशः स्वयंभूः श्चतुरा ननः ॥ १६ ॥ धाता ब्जयोनि द्रुहिणो विरिंचिः कमला सनः ॥ स्त्रष्टा प्रजा पति र्वेधा विधाता विश्व सृड्विधिः ॥ १७ ॥

*विष्णु नाम

विष्णु र्नारायणः कृष्णो वैकुंठो विष्टरश्र वाः ॥ दामोदरो हृषीकेशः केशवो माधवः स्वभूः ॥ १८ दैत्यारिः पुंडरी काक्षो गोविंदो गरुड ध्वजः ॥ पीतांब॰ रो च्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः ॥ १९ ॥ उपेंद्र इंद्रा वरज श्च क्रपाणि श्चतुर्भुजः ॥ पद्मनाभो मधुरिपु र्वासु॰ देव स्त्रिविक्रमः ॥ २० ॥ देवकी नंदनः सौरिः श्रीपतिः पु रुषोत्तमः ॥ वनमाली बलिध्वंसी कंसाराति रधोक्षजः ॥ २१ ॥ विश्वंभरः कैटभजि द्विधुः श्रीवत्सलांछनः ॥ पुराण पुरुषो यज्ञपुरुषो नरकांतकः ॥ २२ ॥ जलशायी विश्वरू पो मुकुंदो मुरमर्द्दनः ॥

*वसुदेव नाम

वसुदेवो स्य जनकः सस्वानकदुं दुभिः ॥ २३ ॥

*बलभद्र नाम

बलभद्रः प्रलंबघ्नो बलदेवो च्युताग्रजः ॥ रे॰ वती रमणो रामः कामपालो हलायुधः ॥ २४ ॥ नीलांब रो रौहिणेय स्तालांको मुशली हली ॥ संकर्षणः सीरपा॰

*कामदेवनाम
रिः कालिंदी भेदनो बलः ॥२५॥ मदनो मन्मथो मारः प्र
द्युम्नो मीन केतनः ॥ कंदर्पो दर्पको नंगः कामः पंचशरः
स्मरः ॥२६॥ शंबरारि र्मनसिजः कुसुमेषु रनन्यजः ॥ पु॰
*अनिरुद्धनाम
ष्प धन्वा रतिपति र्मकर ध्वजं आत्म भूः ॥२७॥ ब्रह्मसूर्ऋष्य
*लक्ष्मीनाम
केतुः स्याद निरुद्ध उषापतिः ॥ लक्ष्मीः पद्मालया पद्माक
मला श्रीर्हरिप्रिया ॥२८॥ इंदिरा लोक माता मा क्षीरा
*शंखनाम *चक्रनाम
ब्धि तनया रमा ॥ शंखो लक्ष्मी पतेः पांचजन्यश्चक्रं सु॰
*गदानाम *मणिनाम
दर्शनः ॥ २९ ॥ कौमोदकी गदा खड्गो नंदकः कौस्तु॰
गरुडनाम
भो मणिः ॥ गरुत्मान् गरुडः स्तार्क्ष्यो वैनतेयः ख
गेश्वरः ॥ ३० ॥ नागांतको विष्णुरथः सुपर्णः पन्न-
महादेवनाम
गाशनः ॥ शंभुरीशः पशुपतिः शिवः शूली महे॰
श्वरः ॥ ३१ ॥ ईश्वरश्शर्व ईशानः शंकर श्चंद्र शेखरः
भूतेशः खंड परशु गिरीशो गिरिशो मृडः ॥ ३२ ॥
मृत्युं जयः कृत्तिवासाः पिनाकी प्रथमाधिपः ॥ उ-
ग्रः कपर्दी श्रीकण्ठः शिति कंठः कपालभृत ॥३३॥
वाम देवो महा देवो विरूपाक्षं स्त्रिलोचनः ॥ कृ
शानु रेताः सर्वज्ञो धूर्जटि र्नील लोहितः ॥३४॥

हरः स्मरहरो भर्गस्त्र्यंबकस्त्रिपुरांतकः ॥ गंगाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः ॥ ३५ ॥ व्योमकेशो भवो भीमः स्थाणू रुद्र उमापतिः ॥ कपर्दोऽस्य जटाजूटः पिनाकोऽजगवं धनुः ॥ ३६ ॥ प्रमथाः स्युः पारिषदा ब्राह्मीत्याद्यास्तु मातरः ॥ ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥ वाराही च तथेंद्राणी चामुंडा सप्त मातरः ॥ विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा ॥ ३८ ॥ अणिमा महिमा चैव गरिमा लघिमा तथा ॥ प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः ॥ ३९ ॥ उमा कात्यायनी गौरी काली हैमवतीश्वरी ॥ शिवा भवानी रुद्राणी शर्वाणी सर्वमंगला ॥ अपर्णा पार्वती दुर्गा मृडानी चंडिकाम्बिका ॥ आर्या दाक्षायणी चैव गिरिजा मेनकात्मजा ॥ ४१ ॥ विनायको विघ्नराजद्वैमातुरगणाधिपाः ॥ अप्येकदंतहेरंबलंबोदरगजाननाः ॥ ४२ ॥ कार्तिकेयो महासेनः शरजन्मा षडाननः ॥ पार्वतीनं-

+ जटानाम + धनुषनाम रुद्रगणनाम + मातृनाम + विभूतिनाम + पार्वतीनाम गणेशनाम स्वामिकार्तिकनाम

दनः स्कंदः सेनानी रग्नि भूर् गुहः ॥ ४३ ॥ वाहुलेयस्ता
रक जित् विशाखः शिखि वाहनः ॥ षाण्मातु
+इंद्रनाम
रः शक्ति धरः कुमारः क्रौंच दारणः ॥ ४४ ॥ इं-
द्रो मरुत्वा न्मघवा विडौजाः पाक शासनः ॥ वृ
द्धश्रवाः सुना सीरः पुरहूतः पुरंदरः ॥ ४५ ॥ जि-
ष्णु र्लेखर्षभः शक्रः शत मन्यु र्दिवस्पतिः ॥ सु-
त्रामा गोत्रभिद्वज्री वासवो वृत्रहा वृषा ॥ ४६ ॥ वा-
स्तो ष्पतिः सुरपति र्वलारातिः शची पतिः ॥ जं-
भ भेदी हरि हयः स्वाराट् नमुचि सूदनः ॥ ४७ ॥
संक्रंदनो दुश्च्यवन स्तुराषाण्मेघ वाहनः ॥ आखंड-
+इंद्राणी नाम
लः सहस्राक्ष ऋभुक्षा स्तस्य तु प्रिया ॥ ४८ ॥ पु-
+इंद्र नगरी नाम +हयनाम
लो मजा शची इंद्राणी नगरी त्वमरा वती ॥ हय
+इंद्र सूत नाम +इंद्र वन नाम +इंद्र घर नाम
उच्चैःश्रवाः सूतो मातलि र्नंदनं वनं ॥ ४९ ॥ स्या-
+इंद्र भुवन नाम +ऐरावति
त्प्रासादो वैजयंतो जयंतः पाक शासनिः ॥ ऐरा
नाम +वज्रनाम
वतो भ्र मातंगै रावणा भ्रमु वल्लभाः ॥ ५० ॥ ह्रा-
दिनी वज्र मस्त्री स्या त्कुलिशं भिदुरं पविः ॥ श-
त कोटिः स्वरुः शंबो दंभोलि रश निर्द्वयोः ॥ ५१

*विमाननाम · *देवस-भानाम
व्योमयानं विमानोऽस्त्री नारदाद्याः सुरर्षयः ॥ स्या-
*अमृतनाम · *मंदा-किनीनाम
त्सुधर्मा देवसभा पीयूषममृतं सुधा ॥५२॥ मं-
*सुमेरुपर्वतनाम
दाकिनी वियद्गंगा स्वर्णदी सुरदीर्घिका ॥ मेरुः सु-
*देववृक्षनाम
मेरु र्हेमाद्री रत्नसानुः सुरालयः ॥५३॥ पंचैते
देवतरवो मंदारः पारिजातकः ॥ संतानः कल्पवृ-
*सनत्कुमारनाम
क्षश्च पुंसिवा हरिचंदनं ॥५४॥ सनत्कुमारो वै-
*अश्विनीकुमारनाम
धात्रः स्वर्वैद्या वश्विनीसुतौ ॥ नासत्यावश्विनौ द-
*स्वर्गवेश्यानाम
स्रावाश्विनेयौ च तावुभौ ॥५५॥ स्त्रियां बहुष्वप्स-
रसः स्वर्वेश्या उर्वशीमुखाः ॥ घृताची मेनका रंभा
उर्वशीच तिलोत्तमा ॥५६॥ सुकेशी मंजुघोषा-
*गंधर्वनाम
द्याः कथ्यंतेऽप्सरसो बुधैः ॥ हाहा हूहू श्चैव मा-
*अग्निनाम
द्या गंधर्वा स्त्रिदिवौकसां ॥५७॥ अग्नि र्वैश्वा-
नरो वह्नि र्वीतिहोत्रो धनंजयः ॥ कृपीटयोनि
र्ज्वलनो जातवेदा स्तनूनपात् ॥५८॥ बर्हिः शु-
ष्मा कृष्णवर्त्मा शोचिः केश उषर्बुधः ॥ आश्र-
याशो बृहद्भानुः कृशानुः पावकोऽनलः ॥५९॥
रोहिताश्वो वायुसखः शिखावाना शुशुक्षणिः

हिरण्य रेता हुत भुग्द हनो हव्य वाहनः॥ ६०॥स
प्तार्चि र्दमुनाः शुक्रश्चित्रभानु र्विभा वसुः॥शुचि
वाडवाग्निनाम — अग्निशि
रप्पित्त मौर्वस्तु वाडवो वडवा नलः॥ ६१॥वन्हेः
ज्वानाम
र्द्वयो र्ज्वाल कीला वर्चि र्हेतिः शिखा स्त्रियां॥
अग्निकणानाम — संतापनाम
त्रिषुस्फु लिंगो ग्नि कणाः संतापः संज्वरः समौ
धर्मराजनाम
॥ ६२॥धर्मराजः पितृ पतिः सम वर्त्ती परे तरा-
ट्॥ कृतांतो यमुना भ्राता शमनो यमरा ड्यमः
६३॥कालो दंड धरः श्राद्ध देवो वैवस्वतों तकः
राक्षसनाम
राक्षसः कौणपः क्रव्यात् क्रव्यादो स्रप आशरः
६४॥रात्रिं चरो रात्रि चरः कर्बुरो निकषा त्मजः
यातु धानः पुराय जनो नैर्ऋतो यातु रक्षसी
वरुणनाम
६५॥ प्रचेता वरुणः पाशी यादसां पति रप्पतिः
वायुनाम
श्वसनः स्पर्शनो वायु र्मातरिश्वा सदा गतिः॥
६६॥ पृषदश्वो गंधवहो गंधवाहा निला शुगाः
समीर मारुत मरुत् जगत्प्राण समीरणाः॥
देहस्थ
६७॥ नभस्व द्वात पवन पवमान प्रभंजनाः॥प्रा-
पवननाम
णो पानः समा नश्चोदानव्या नौचवायवः॥६८॥ह

दि प्राणो गुदे पानः समानो नाभि संस्थितः ॥ उदा
नः कंठ देशस्थो व्यानः सर्व शरीरगः ॥ ६९ ॥ शरीरं

* पंचवेगस्य नाम — * शरीर नाम

स्याद् मेरंहः तरसी तुरयः स्यदः ॥ जवोथ शीघ्रं त्व-
रितं लघु क्षिप्र मरं द्रुतं ॥ ७० ॥ सत्वरं चपलं तूर्णम

* निरंतर नाम

विलं वित माशुच ॥ सततं नारतं श्रांत संततं विर

* अतिशय नाम

ता निशं ॥ ७१ ॥ नित्या नवर ता जस्त्र मप्यथातिश
यो भरः ॥ अति वेल भृश त्यर्था ति मात्रोद्गाढ निर्भरं
॥ ७२ ॥ तीव्रै कांत नितां तानि गाढबाढहढा निच ॥
क्लीवे शीघ्रा द्यं सत्वे स्यात् त्रिष्वेषां सत्व गा मियत् ।

* कुबेर नाम

७३ ॥ कुवेर स्त्र्यंवक सखो यक्ष राड्गुह्य के श्वरः ॥ मनु-
ष्य धर्मी धनदो राज राजो धनाधिपः ॥ ७४ ॥ किन्नरे-
शो वैश्रवणः पौलस्त्यो नर वाहनः ॥ यक्षै कपिंगैल-

* सप्तदश कुबेरस्य — * बाग नाम

विल श्रीद पुराय जनेश्वराः ॥ ७५ ॥ अस्योद्यानं चैत्रर

* कुबेरपुत्र नाम — * नगर नाम

थः पुत्रस्तु नल कूवरः ॥ कैलाशः स्थान मलका पू-

* विमान नाम — * चत्वारि तुरंग वदनस्य

र्वि मानंतु पुष्पकं ॥ ७६ ॥ स्यात्किन्नरः किंपुरुष स्तुरंग

* निधि नाम

वदनो मयुः ॥ निधिर्नाशे वधिभेदाः पद्म शंखा दयो

* आकाश नाम

निधेः ॥ ७७ ॥ इति स्वर्गवर्गः ॥ द्योदिवौ द्वे स्त्रियामभ्रं

व्योम पुष्कर मंबरं ॥ नभोंत रिक्षं गगन मनंतं सुरवर्त्म

खं ॥७८॥ वियद्विष्णु पदं पदं वातु पुंस्या काश विहायसी

॥ विहाय सो पि नाको पि द्युरपि स्यात्तद व्ययम् ॥७९॥

तारा पथोंत रिक्षं स्यान्मेघ मार्गो महाबिलः ॥ इति व्योम

+ दिग्नाम

वर्गः ॥ दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः ॥१

प्राच्य वाची प्रतीच्यस्ताः पूर्व दक्षिण पश्चिमाः ॥१॥ उ

+ दिगादिभ्यो पत   पू.   अग्निको

त्तरादिगुदीचीस्या द्दिश्यंतु त्रिषु दिग्भवेत् ॥ इंद्रो वन्हिः

पश्चिम   वायुको   उत्तरको०   ईशानको

पितृ पतिः नैर्ऋतो वरुणो मरुत् ॥२॥ कुबेर ईशः पत

दिक्पालानो पृथक २   पू. स.   अ.को   दक्षिदि   नैर्ऋति

यः पूर्वादीनां दिशां क्रमात् ॥ रविः शुक्रो महीसूनुः स्व

पश्चिम   वायु   उत्तर   ई.को

र्भानुर्भानुजो विधुः ॥३॥ बुधो बृहस्पतिश्चेव दिशा मी

दिग्गजनाम पूर्वादि से

शां तथा ग्रहाः ॥ ऐरावतः पुंडरीको वामनः कुमुदोंज

नः ॥४॥ पुष्पदंतः सार्वभौमः सुप्रतीकश्च दिग्गजाः ॥

दिग्गज की स्त्री का नाम

करिण्योभ्रमु कपिला पिंगला नुपमा क्रमात् ॥५॥ ता

सूच

म्र पर्णी शुभ्रदंती चांगना चांजना वती ॥ क्लीवे व्ययंत्व

दिशा:   कोण   बीच

पदिशं दिशो र्मध्ये विदिक् स्त्रियां ॥६॥ अभ्यंतरं त्वंत-

क्षितिजनाम   मेघनाम

रालं चक्रवालं तु मंडलं ॥ अभ्रं मेघो वारि वाहः स्तन-

यित्नु र्बलाहकः ॥७॥ धाराधरो जलधर स्तडित्वान्-

वारिदोम्बुभृत्॥ घन जीमूत मुदिर जलमुग्धूमयोनयः

गर्जनाम

८॥ कादंबिनी मेघमाला त्रिषुमेघभवेभ्रियं॥ स्तनितं गर्जितं मेघनिर्घोषे रसितादि च॥९॥ शंपाशतहृदा-

* बिजलीनाम

ह्रादिन्यैरावत्यः क्षणप्रभाः॥ तडित्सौदामिनी विद्युत्

* वज्रशब्दनाम

चंचला चपला अपि॥१०॥ स्फूर्जथुर्वज्र निर्घोषे मेघ-

* इंद्रधनुषनाम

ज्योतिरिरंमदः॥ इंद्रायुधं शक्रधनुस्तदेव ऋजु रोहि-

वृष्टिनाम * धारानाम

तं॥११॥ वृष्टिर्वर्षं तद्विघातेवग्राहावग्रहौ समौ॥ धारा

* अलकणोनाम * मेघमा॰

संपात आसारः शीकरोंबुकणाः स्मृताः॥१२॥ वर्षो-

लानाम वृष्टि निवारण नाम

पलस्तु करको मेघछन्नेन्हि दुर्दिनं॥ अंतर्द्धा व्यवधा

ढकनानाम

पुंसित्वंतर्द्धिरपवारणं॥१३॥ अपिधान तिरोधान पि-

चंद्रमानाम

धानाच्छादनानि च॥ हिमांशुश्चंद्रमाश्चंद्र इंदुः कुमुद-

बांधवः॥१४॥ विधुः सुधांशुः शुभ्रांशुरोषधीशो नि-

शापतिः॥ अब्जो जैवातृकः सोमो ग्लौ मृगांकः कला-

निधिः॥१५॥ द्विजराजः शशधरो नक्षत्रेशः क्षपाक-

* कलानाम * मंडलनाम

रः॥ कलातु षोडशो भागो बिंबोस्त्री मंडलं त्रिषु॥१६

* खंडनाम * चांदिनीनाम

भित्तं शकल खंडे वा पुंस्यर्धोर्द्धं समेंशके॥ चंद्रिका कौ-

* प्रसादनाम कलंकनाम

मुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता॥१७॥ कलंकांकौ

लांछनं च चिन्हं लक्ष्म च लक्षणं ॥ सुषमा परमा शोभा

आभा कांतिर्द्युतिश्छविः ॥१८॥ अवश्याय स्तु नीहार

स्तुषारः स्तुहिनं हिमं ॥ प्रालेयं मिहिका चाथ हिमा-

नी हिमसं हतिः ॥१९॥ शीतं गुणोत्त हृदर्थाः सुषीमः

शिशिरो जडः ॥ तुषारः शीतलः शीतो हिमः सप्तान्य

लिंगकाः ॥२०॥ ध्रुव औत्तान पादिः स्याद गस्त्यः कुंभ-

संभवः ॥ मैत्रावरुणिरस्यैव लोपा मुद्रा सधर्मिणी ॥२१

नक्षत्र मृक्षं भं तारा तारकाप्युडु वा स्त्रियां ॥ दाक्षा यण्यो

श्विनी त्यादि तारा अश्वयुगश्विनी ॥२२॥ राधा विशा-

खा पुष्येतु सिध्य तिष्यौ श्रविष्टयाः ॥ समा धनिष्ठास्युः

प्रोष्ठ पदा भाद्र पदा स्त्रियां ॥२३॥ मृगशीर्षं मृगशिरस्त-

स्मिन्नेवा ग्रहा यणी ॥ इल्वलास्तच्छिरोदेशे तारका नि-

वसंतिया ॥२४॥ बृहस्पतिः सुराचार्यो गीष्पतिर्धिष-

णो गुरुः ॥ जीव आंगिरसो वाचस्पतिश्चित्र शिखंडिजः

२५॥ शुक्रो दैत्य गुरुः काव्य उशना भार्गवः कविः ॥ अं-

गारकः कुजो भौमो लोहितांगो महीसुतः ॥२६॥ रौ-

हिणेयो बुधः सौम्यः समौ सौरिशनिश्चरौ ॥ शनिमं-

* राहुनाम
द्वौ च पंगुश्च छायापुत्रो सितश्शनः॥२७॥ तमस्तु राहुः स्व
* केतुनाम
र्भानुः सैंहिकेयो विधुंतुदः॥ केतुः शिखीक विज्ञेयो व-
रुणो मरुतात्मजः॥२८॥ मरीचि रंगिरा अत्रिः पुलस्त्यः
पुलहः क्रतुः॥ वशिष्ठश्चेति सप्तैते ज्ञेयाश्चित्र शिखंडिनः
* लग्नराशि
* सप्तऋषि नाम
२९॥ सप्तर्षयो मरीच्यत्रि मुखाश्चित्र शिखंडिनः॥ राशी-
नाम
ना मुदयो लग्नं ते तु मेष वृषादयः॥३०॥ मेषो वृषो थ मि-
थुनं कर्कटः सिंह कन्यके॥ तुलाथ वृश्चिको धन्वी मकरः
* सूर्यनाम
कुंभ मीनकौ॥३१॥ सूरसूर्यार्य मादित्य द्वादशात्म दिवा-
कराः॥ भास्कराहस्कर ब्रध्न प्रभाकर विभाकराः॥३२॥
भास्वद्विवस्वत्सप्ताश्व हरिदश्वोष्णरश्मयः॥ विकर्त्तना
र्क मार्त्तंड मिहिरारुणा पूषणः॥३३॥ द्युमणिस्तरणि
मित्रश्चित्र भानुर्विरोचनः॥ विभावसुर्ग्रह पति स्त्विषां
पति रहर्पतिः॥३४॥ भानुर्हंसः सहस्रांशु स्तपनः स-
विता रविः॥ कर्मसाक्षी जगच्चक्षु रंशुमाली त्रयीतनुः॥
* पारि
३५॥ प्रद्योतनो दिनमणिः खद्योतो लोकबांधवः॥ मा
पार्श्विकनाम अरुणा
ठरः पिंगलो दंड श्चंडांशोः पारि पार्श्विकाः॥३६॥ सूर
नाम परिवेषणनाम
सूतो रुणोनूरुः काश्यपि र्गरुडाग्रजः॥ परिवेषस्तु प

* किरणनाम

विधिरुपसूर्यकमंडले॥ ३७॥ किरणोस्रमयूखांशुगभ-
स्तिघृणिधृष्णयः॥ भानुः करो मरीचिः स्त्रीपुंसयोर्दीधि-

* प्रभानाम

तिः स्त्रियां॥ ३८॥ स्युः प्रभारुग्रुचिस्त्विड्भाभाश्छविद्युति
दीप्तयः॥ रोचिः शोचिरुभे क्लीबे प्रकाशो द्योत आतपः

उष्णनाम * तीक्ष्णनाम

३९॥ कोष्णं कवोष्णं मंदोष्णं कदुष्णं त्रिषु तद्वति॥ तिग्मं

* मृगतृष्णानाम

तीक्ष्णं खरं तद्वन्मृगतृष्णा मरीचिका॥ ४०॥ इति दिग्वर्गः

* कालनाम

कालो दिष्टोप्यनेहापि समयोप्यथ पक्षतिः॥ प्रतिपद्द्वे

* दिननाम

इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः॥ १॥ घस्रो दिनाहनी

प्रभातनाम

वा तु क्लीबे दिवसवासरौ॥ प्रत्यूषोहर्मुखं कल्यमुषः
प्रत्यूषसी अपि॥ २॥ प्रभातं च दिनांते तु सायं संध्या पि-

* मध्याह्ननाम रात्रिनाम

तृप्रसूः॥ प्राह्णापराह्णमध्याह्नास्त्रिसंध्यमथ शर्वरी
॥ ३॥ निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा।

* तामसी

विभावरीतमस्विन्यौ रजनी यामिनी तमी॥ ४॥ तमि-

रात्रिनाम

स्रा तामसी रात्रिर्ज्योत्स्नी चंद्रिकयान्विता॥ आगा-

* गणरात्रिनाम

मिवर्तमानाहर्युक्तायां निशि पक्षिणी॥ ५॥ गणरा-

प्रदोषनाम * अर्द्धरात्रिनाम

त्रं निशा बह्व्यः प्रदोषो रजनीमुखं॥ अर्द्धरात्रनिशीथौ

* समनाम

द्वौ द्वौ यामप्रहरौ समौ॥ ६॥ स पर्वसंधिः प्रतिपत्पंचद-

प्रथमेयार्थदंतरं ॥ पक्षान्तौ पंचदश्यौ द्वे पौर्णमासी तु पौर्णि-
मा ॥७॥ कलाहीने सानुमतिः पूर्णे राका निशाकरे ॥
अमावास्या त्वमावास्या दर्शः सूर्येन्दुसंगमः ॥८॥ सा दृ-
ष्टेन्दुः सिनीवाली सा नष्टेन्दुः कला कुहूः ॥ उपरागो ग्रहो
राहुग्रस्ते त्विन्दौ च पुष्णि च ॥९॥ सोपप्लवोपरक्तौ द्वाव-
ग्न्युत्पात उपाहितः ॥ एकयोक्त्या पुष्पवंतौ दिवाकर-
निशाकरौ ॥१०॥ अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु
ताः कलाः ॥ तास्तु त्रिंशत् क्षणास्ते तु मुहूर्तो द्वादशा-
स्त्रियां ॥११॥ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पंच च ॥
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ ॥१२॥ द्वौ द्वौ
माघादि मासौ स्यादृतुस्तैरयनं त्रिभिः ॥ अयने द्वे गति-
रु दग्दक्षिणार्कस्य वत्सरः ॥१३॥ समरात्रिंदिवे काले
विषुवद्विषुवं च तत् ॥ पुष्ययुक्ता पौर्णमासी पौषी मा-
से तु यत्र सा ॥१४॥ नाम्ना स पौषो माघाद्याश्चैवमेकाद-
शाऽपरे ॥ मार्गशीर्षे सहा मार्ग आग्रहायणिकश्च सः
॥१५॥ पौषे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने ॥ स्यात्त-
पस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः ॥१६॥ वैशा-

आषाढनाम
रवे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ॥ आषाढे॰
भाद्रपदनाम
श्रावणे तु स्यान्नभाः श्रावणिकश्च सः ॥१७॥ स्युर्नभस्यः
आश्विननाम
प्रोष्ठपदभाद्रभाद्रपदाः समाः ॥ स्यादाश्विन इषोऽप्याः॰
कार्तिकनाम
श्वयुजोऽपि स्यात्तु कार्त्तिके ॥१८॥ बाहुलोर्जौ कार्त्तिकिको
हेमंतनाम वसंतनाम ग्रीष्मनाम
हेमंतः शिशिरो स्त्रियां ॥ वसंते पुष्पसमयः सुरभिर्ग्रीष्म॰
ऊष्मकः ॥१९॥ निदाघ उष्णोपगम उष्म उष्मागमस्तपः ॥
श्रावणभाद्रपदयोर्नाम वर्षानाम
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियां ॥२०॥ षड॰
सर्वऋतुनाम संवत्सरनाम
मी ऋतवः पुंसि मार्गादीनां युगैः क्रमात् ॥ संवत्सरो व॰
त्सरोऽब्दो हायनोऽस्त्री शरत्समाः ॥२१॥ मासेन स्याद्होरा
ब्रह्मा के अहोरात्रनाम
त्रः पैत्रो वर्षेण दैवतः ॥ दैवे युगसहस्रे द्वे ब्राह्मः कल्पौ तु तौ
मन्वंतरनाम
नृणां ॥२२॥ मन्वंतरं तु दिव्यानां युगानामेकसप्ततिः ॥
प्रलयनाम पापनाम
संवर्त्तः प्रलयः कल्पः क्षयः कल्पांत इत्यपि ॥२३॥ अस्त्री
पंकं पुमान् पाप्मा पापं किल्बिषं कल्मषं ॥ कलुषं वृजि॰
धर्मनाम
नैनो घमंहो दुरितं दुष्कृतं ॥२४॥ स्याद्धर्ममस्त्रियां पु॰
प्रीतिनाम
ण्यश्रेयसी सुकृतं वृषः ॥ मुत्प्रीतिः प्रमदो हर्षः प्रमोदा॰
सुखनाम
मोदसंमदाः ॥२५॥ स्यादानंदथुरानंदः शर्मशातसुखा॰
कल्याणनाम
नि च ॥ श्वःश्रेयसं शिवं भद्रं कल्याणं मंगलं शुभं ॥२६॥ १

+ प्रशस्त नाम

भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियां ॥ शस्तं चाथ त्रि-
षु द्रव्ये पापं पुण्यं सुखादि च ॥२७॥ मतल्लिका मचर्चिका
प्रकाण्डमुद्धतल्लजौ ॥ प्रशस्तवाचकान्यमून्ययः शुभाव-

+ दैवनाम

हो विधिः ॥२८॥ दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्वि-
धिः ॥ हेतुर्ना कारणं बीजं निदानं त्वादिकारणं ॥२९॥

+ आत्मानाम | प्रकृतिनाम

क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियां ॥ विशेषः

+ गुणनाम | + जन्मनाम

कालिकोवस्था गुणाः सत्त्वं रजस्तमः ॥३०॥ जनुर्जन-

+ जन्मनाम | + प्राणीनाम

नजन्मानि जनिरुत्पत्तिरुद्भवः ॥ प्राणी तु चेतनो जन्मी

+ जातिनाम | + व्यक्ति-

जंतुजन्युशरीरिणः ॥३१॥ जातिर्जातं च सामान्यं व्य-

नाम | + चित्तनाम

क्तिस्तु पृथगात्मता ॥ चित्तं तु चेतो हृदयं स्वांतं हृन्मानसं-

+ बुद्धिनाम

मनः ॥३२॥ इति कालवर्गः ॥ बुद्धिर्मनीषा धिषणा धीः
प्रज्ञा शेमुषी मतिः ॥ प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्ति-

+ धारणावती बुद्धिनाम | + संकल्पनाम

चेतना ॥३३॥ धीर्धारणावती मेधा संकल्पः कर्म मानसं
॥ चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा ॥३४॥

+ तर्कनाम | + संदेहनाम

अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः ॥ संदेहद्वाप-

+ निश्चयनाम | + मिथ्यादृष्टिनाम

रौ चाथ समौ निर्णयनिश्चयौ ॥३५॥ मिथ्यादृष्टिर्नास्ति-

+ द्रोहनाम | + सिद्धांतनाम | + भ्रांतिनाम

कता व्यापादो द्रोहचिंतनं ॥ समौ सिद्धांतराद्धांतौ भ्रांति

+ अंगीकारनाम
मिथ्या मतिर्भ्रमः ॥ ३६ ॥ संविदागूः प्रतिज्ञानं नियमाश्रव

संश्रवाः ॥ अंगीकाराभ्युपगमप्रतिश्रवसमाधयः ॥ ३७ ॥
+ विज्ञाननाम २ मोक्षनाम १ + विज्ञाननाम + मोक्षनाम
मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयोः ॥ मुक्तिः

कैवल्यनिर्वाणश्रेयोनिःश्रेयसामृतं ॥ ३८ ॥ मोक्षोपव-
+ अज्ञाननाम + रूपादिविषयनाम
र्गोऽथाज्ञानमविद्याहंमतिः स्त्रियां ॥ रूपं शब्दो गंधरस
+ गोचरइंद्रियनाम + सामान्य
स्पर्शाश्च विषया अमी ॥ ३९ ॥ गोचरा इंद्रियार्थाश्च हृषी-
इंद्रियनाम + कर्मेंद्रियनाम
कं विषयींद्रियं ॥ कर्मेंद्रियं तु पाय्वादि मनोनेत्रादि धींद्रि
+ षड्रसनाम
यं ॥ ४० ॥ तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः ॥ ति-
परिमलनाम
क्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ ४१ ॥ विमर्दो-

त्थे परिमलो गंधो जनमनोहरे ॥ आमोदः सोऽति निर्हा
+ सुगंधिनाम
री वाच्यलिंगत्वमागुणात् ॥ ४२ ॥ समाकर्षी तु निर्हारी

सुरभिर्घ्राणतर्पणः ॥ इष्टगंधः सुगंधिः स्यादामोदी मु-
+ दुर्गंधिनाम
खवासनः ॥ ४३ ॥ पूतिगंधिस्तु दुर्गंधो विस्रं स्यादामगंधि
+ शुक्लवर्णनाम
यत् ॥ शुक्लशुभ्रशुचिश्वेतविशदश्वेतपांडुराः ॥ ४४ ॥ अ-
+ पांडुरनाम
वदातः सितो गौरो वलक्षो धवलोऽर्जुनः ॥ हरिणः पांडु-
+ कृष्णवर्णनाम
रः पांडुरीषत्पांडुस्तु धूसरः ॥ ४५ ॥ कृष्णे नीलासितश्यामा-
+ पीतवर्णनाम + हरितनाम
मकालश्यामलमेचकाः ॥ पीतो गौरो हरिद्राभः पालाः-

✣ अरुणनाम
शो हरितो हरित् ॥ ४६ ॥ रोहितो लोहितो रक्तः शोणः
✣ अरक्तवर्णनाम ✣ श्वेत रक्त मिश्रित नाम
कोकनदच्छविः ॥ अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पा
✣ कृष्णपीत मिश्रित वर्णनाम
टलः ॥ ४७ ॥ श्यावः स्यात्कपिशो धूम्रधूमलौ कृष्णलो-
✣ कपिलवर्णनाम
हिते ॥ कडारः कपिलः पिंग पिशंगौ कद्रु पिंगलौ ॥ ४८
✣ नाना वर्णनाम
चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे ॥ गुणे शुक्ला-
दयः पुंसि गुणिलिंगास्तु तद्वति ॥ ४९ ॥ इति धीवर्गः ॥
सरस्वतीनाम
ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती ॥ व्याहार
✣ संस्कृत भाषानाम
उक्तिर्लपितं भाषितं वचनं वचः ॥ ५० ॥ अपभ्रंशोऽपश-
✣ समुदायनाम
ब्दः स्याच्छास्त्रे शब्दस्तु वाचकः ॥ तिङ्सुबन्तचयो वा-
✣ वेदनाम
क्यं क्रिया वा कारकान्विता ॥ ५१ ॥ श्रुतिः स्त्री वेद आम्ना
✣ अथ वेदत्रयीनाम
यस्त्रयी धर्मस्तु तद्विधिः ॥ स्त्रियामृक्सामयजुषी इति
✣ अंगनाम
वेदास्त्रयस्त्रयी ॥ ५२ ॥ शिक्षेत्यादि श्रुतेरंगमोंकार-
✣ इतिहासनाम
प्रणवौ समौ ॥ इतिहासः पुरावृत्तमुदात्ताद्यास्त्रयः स्व
✣ राजपक्षनाम
राः ॥ ५३ ॥ आन्वीक्षिकी दंडनीतिः तर्कविद्यार्थशास्त्र-
✣ पुराणनाम
योः ॥ आख्यायिकोपलब्धार्थाः पुराणं पंचलक्षणं ॥
✣ प्रबंधनाम ✣ पहेलीनाम
५४ ॥ प्रबंधकल्पना कथा प्रवल्हिका प्रहेलिका ॥ स्मृ-
✣ समस्यानाम
तिस्तु धर्मसंहिता समाहृतिस्तु संग्रहः ॥ ५५ ॥ समस्या

+ वार्तानाम

तु समासार्था किंवदंती जनश्रुतिः॥ वार्त्ता प्रवृत्तिर्वृत्तांत उ-

+ नामकानामानि

दंतः स्यादथाह्वयः॥५६॥ आख्याह्वे अभिधानंच ना-

आह्वाननाम

मधेयंच नामच॥ हूतिराकारणाह्वानं संहूतिर्बहुभिः

+ विवादनाम

कृता॥५७॥ विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखं

+ शपथनाम

उपोद्घातउदाहारः शपनं शपथः पुमान्॥५८॥ प्रश्नोऽनु

+ प्रश्ननाम + मिथ्यानाम

योगः पृच्छाच प्रतिवाक्योत्तरे समे॥५९॥ मिथ्याभियो

गोऽभ्याख्यानमथ मिथ्याभिशंसनं॥५९॥ अभिशापः

+ यशनाम

प्रणादस्तु शब्दः स्यादनुरागजः॥ यशः कीर्तिः समज्ञा-

+ प्रशंसानाम + आम्रेडितनाम

च स्तवः स्तोत्रं नुतिः स्तुतिः॥६०॥ आम्रेडितं द्विस्त्रिरु-

क्त मुच्चैर्घुष्टंतु घोषणा॥ काकुः स्त्रियां विकारो यः शोक

+ कुवचननाम

भीत्यादिभिर्ध्वनेः॥६१॥ अवर्णाक्षेप निर्वाद परीवादा

+ निंदानाम

पवादवत्॥ उपक्रोशो जुगुप्साच कुत्सा निंदाच गर्हणे॥

+ अतिवादनाम + उपालंभ

६२॥ पारुष्यमतिवादः स्यात्तु भर्त्सनंत्वपकारगीः॥ यः स

नाम

निंद उपालंभस्तत्र स्यात्परिभाषणं॥६३॥ तत्र त्वाक्षार

+ अनर्थनामानि

णाः यः स्यादाक्रोशो मैथुनं प्रति॥ स्यादाभाषणमाला-

पः प्रलापोऽनर्थकं वचः॥६४॥ अनुलापो मुहुर्भाषा विला-

संलापनाम

पः परिदेवनं॥ विप्रलापो विरोधोक्तिः संलापो भाषणं

लोभवचननाम

भिधाः ॥६५॥ सुप्रलापः सुवचनमपलापस्तु निन्हवः ॥

कल्याण

संदेशवाग्वाचिकं स्याद्वाग्भेदास्तु त्रिषूत्तरे ॥६६॥ रुषती

वचननाम मधुरवचननाम

वागकल्याणी स्यात्कल्या तु शुभात्मिका ॥ अत्यर्थम-

कठोरवचननाम

धुरं शान्त्वं संगतं हृदयंगमं ॥६७॥ निष्ठुरं परुषं ग्राम्यम-

उतावल वचननाम

श्लीलं सूनृतं प्रिये ॥ सत्येथ संकुलक्लिष्टे परस्परपराहते

लुप्तवर्ण नाम समुदायार्थ सेल्प

६८॥ लुप्तवर्णपदं ग्रस्तं निरस्तं त्वरितोदितं ॥ अम्बूकृतं

वचननाम अनक्षर वचन नाम

सनिष्ठीवमबद्धं स्यादनर्थकं ॥६९॥ अनक्षरमवाच्यं स्या

अव्यक्त वचन नाम अमृत वचन नाम

दाहतं तु मृषार्थकं ॥ अथ म्लिष्टमविस्पष्टं वितथं त्वनृतं

वचः ॥७०॥ सोल्लुंठनं तु सोत्प्रासं मणितं रतिकूजितं ॥

सत्यवचननाम

श्रव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितं ॥७१॥ सत्यं त-

शब्दनाम

थ्यमृतं सम्यगमूनि त्रिषु तद्वति ॥ शब्दे निनादनिनद-

ध्वनिध्वानरवस्वनाः ॥७२॥ स्वाननिर्घोषनिर्ह्रादनाद

अन्यनस्वर्ग

निस्वाननिःस्वनाः ॥ आरावारावसंरावविरावा अथम-

ध्वनिनाम

र्मरः ॥७३॥ स्वनिते वस्त्रपर्णानां भूषणानां तु सिंजि-

अव्यक्त नाम

तम् ॥ निःक्वाणो निःक्वणः क्वाणः क्वणः क्वणनमि

त्यपि ॥७४॥ वीणायाः क्वणिते प्रादेः प्रक्वाणः प्रक्व-

कोलाहल नाम

णादयः ॥ कोलाहलः कलकलस्तिरश्चां वाशितं रुतं

+ प्रतिशब्द नाम + गीत नाम

१५॥ स्त्री प्रतिश्रुत्प्रतिध्वाने गीतं गानमिमे समे ॥ इति श-

+ अथ सप्त स्वर नाम

ब्दादिवर्गः ॥ निषादर्षभगांधारषड्जमध्यमधैवताः पंच-

सूक्ष्म काल नाम

मश्चेत्यमी सप्त तंत्रीकंठोत्थिताः स्वराः ॥ ७६ ॥ काकली

उच्च कल नाम

तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे ॥ कलो मंद्रस्तु गंभीरे

+ वीणा नाम

तारोत्युच्चैस्त्रयस्त्रिषु ॥ ७७ ॥ समन्वितलयस्त्वेकता-

+ तंत्री उपलक्षित वीणा नाम

लो वीणा तु वल्लकी ॥ विपंची सा तु तंत्रीभिः सप्तभिः प-

+ वीणादिक वादित्र नाम + मृदंगादि वादित्र नाम

रिवादिनी ॥ ७८ ॥ ततं वीणादिकं वाद्यमानद्धं मुरजादि-

+ तालझांझ वादि नाम +

कं ॥ वंश्यादिकं तु सुषिरं कांस्यतालादिकं घनं ॥ ७९ ॥ च-

तंत्र्यादि चतुर्विध वादित्र नाम + मृदंग नाम

तुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् ॥ मृदंगा मुरजा

+ आनक नाम

भेदास्त्वंक्यालिंग्योर्ध्वकास्त्रयः ॥ ८० ॥ स्याद्यशःपटहो

भेरी नाम + नगारा नाम

ढक्का भेरी स्त्री दुंदुभिः पुमान् ॥ आनकः पटहोऽस्त्री स्या-

+ वीणादंड नाम

त्कोणो वीणादिवादनं ॥ ८१ ॥ वीणादंडः प्रवालः स्या-

+ वीणा समुच्चयकीयक नाम

त्ककुभस्तु प्रसेवकः ॥ कोलंबकस्तु कायोऽस्या उपना-

+ अंग्रेक नाम

हो निबंधनं ॥ ८२ ॥ वाद्यप्रभेदा डमरुमड्डुडिंडिमझर्झराः

+ विलंबित नाम

मर्द्दलः पणवोऽन्ये च नर्त्तकीलासिके समे ॥ ८३ ॥ विलं-

बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात् ॥ तालः कालक्रि-

+ नृत्य नाम

यामानं लयः साम्यमथास्त्रियां ॥ ८४ ॥ तांडवं नटनं ना-

(नृत्यगीतवादित्र नाम)
ट्यं लास्यं नृत्यं च नर्त्तने ॥ तौर्यत्रिकं नृत्यगीतवादित्रं नाट्य-
(नर्त्तक नाम)
नामकं ॥८५॥ भ्रुकुंसश्च भ्रुकुंसश्च भ्रूकुंसश्चेति नर्त्तकः ॥ स्त्रीवेषधारी पुरुषो नाट्योक्तौ गणिकाज्जुका ॥
(भगिनीपति नाम)
८६॥ भगिनीपतिरावुत्तो भावो विद्वान थावुकः ॥ जनको
(युवराज नाम) (राजा नाम)
युवराजस्तु कुमारो भर्तृदारकः ॥८७॥ राजा भट्टारको
(राजकन्या) (राजस्त्री नाम)
देवस्तत्सुता भर्तृदारिका ॥ देवी कृताभिषेकायामितरासु तु भट्टिनी ॥८८॥
(नृत्य अवध्योक्त नाम)
अब्रह्मण्यमवध्योक्तौ राज्ञः
(माता नाम)
श्यालस्तु राष्ट्रियः ॥ अंबा माताथ बाला स्याद्वासुरा-
(बहिन नाम)
र्यस्तु मारिषः ॥८९॥ अंतिका भगिनी ज्येष्ठा निष्ठा नि-
र्वहणे समे ॥ हंडे हंजे हलाव्हानं नीचां चेटीं सखीं प्रति ॥
(अंगविक्षेप नाम)
९०॥ अंगहारोंगविक्षेपो व्यंजकाभिनयौ समौ ॥ निर्वृ-
(रस नाम)
त्ते त्वंगसत्वाभ्यां द्वे त्रिष्वांगिकसात्विके ॥९१॥ शृंगारवी-
रकरुणाद्भुतहास्यभयानकाः ॥ बीभत्सरौद्रौ च रसाः
(वीररस नाम) (करुणा)
शृंगारः शुचिरुज्ज्वलः ॥९२॥ उत्साहवर्द्धनो वीरः कारु-
(रस नाम)
ण्यं करुणा घृणा ॥ कृपा दयानुकंपा स्यादनुक्रोशोऽ-
(हास्यरस नाम) (विभीति रस नाम)
प्यथो हसः ॥९३॥ हासो हास्यं च बीभत्सं विकृतं त्रिष्वि-
(अद्भुत रस नाम) (महाक्रोध रस नाम)
दं द्वयं ॥ विस्मयोऽद्भुतमाश्चर्यं चित्रमप्यथ भैरवं ॥९४॥

दारुणं भीषणं भीष्मं भीमं घोरं भयानकं ॥ भयंकरं प्र-
भयनाम
तिभयं रौद्रं तूग्रममी त्रिषु ॥ ९५ ॥ चतुर्दश दरस्त्रासो भी
मनोविकारनामे भयप्रतिपादक
तिर्भीः साध्वसं भयं ॥ विकारो मानसो भावोनुभावो भा-
नाम अहंकारनाम चित्तस्योन्नतिनाम
वबोधकः ॥ ९६ ॥ गर्वोभिमानो हंकारो मानश्चित्तसमु
अनादरनाम
न्नतिः ॥ अनादरः परिभवः परीभावस्तिरस्क्रिया ॥ ९७ ॥
लज्जानाम
रीढावमाननावज्ञा अवहेलनमसूर्क्षणम् ॥ मंदाक्षंह्री-
क्षांतिनाम
स्त्रपा व्रीडा लज्जा सापत्रपान्यतः ॥ ९८ ॥ क्षांतिस्तिति-
क्षा भिध्यातु परस्य विषयेस्पृहा ॥ अक्षांतिरीर्ष्यासूया
वैरनाम
तु दोषारोपो गुणेष्वपि ॥ ९९ ॥ वैरं विरोधो विद्वेषो मन्यु
शोकौ तु शुक् स्त्रियां ॥ पश्चात्तापोनुतापश्च विप्रतीसा-
र इत्यपि ॥ १०० ॥ कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ-
शीलनाम उन्मादनाम
स्त्रियौ ॥ शुचौतु चरिते शीलमुन्मादश्चित्तविभ्रमः ॥ १ ॥
स्नेहनाम इच्छानाम
प्रेमानाप्रियता हार्दः प्रेम स्नेहोथदोहदम् ॥ इच्छाकां
क्षास्पृहेहा तृट् वांछा लिप्सा मनोरथः ॥ २ ॥ कामोभिला-
धर्मचिंतानाम
षस्तर्षश्च समहांल्लालसा द्वयोः ॥ उपाधिर्नाधर्मचिंता-
मनपीडानाम स्मरणनाम
पुंस्याधिर्मानसी व्यथा ॥ ३ ॥ स्याच्चिंता स्मृतिराध्यानमु
उत्साहनाम
त्कंठोत्कलिके समे ॥ उत्साहोध्यवशायः स्यात्सवीर्यम-

+ कपटनाम
ति शक्तिभाक् ॥ ४ ॥ कपटोऽस्त्री व्याजदंभोपधयश्छद्मकैतवे
असावधाननाम + कौतूहलादि
कुसृतिर्निकृतिः शाठ्यं प्रमादोऽनवधानता ॥ ५ ॥ कौतूह-
चतुष्कनाम
लं कौतुकं च कुतुकं च कुतूहलम् ॥ स्त्रीणां विलासबिब्बो-
कविभ्रमा ललितं तथा ॥ ६ ॥ हेला लीलेत्यमी हावाः क्रि-
+ क्रीडानाम
याः शृंगारभावजाः ॥ द्रवकेलिपरीहासाः क्रीडा लीला च
+ स्वरूपपर्यवहनाम बाल विलासनाम
नर्म च ॥ ७ ॥ व्याजोऽपदेशो लक्ष्यं च क्रीडा खेला च कूर्दनम् ।
+ अंगजलनाम नष्टचेष्टानाम + आकारगोपननाम
घर्मो निदाघः स्वेदः स्यात्प्रलयो नष्टचेष्टता ॥ ८ ॥ अवहि-
+ आश्चर्यपरत्वकनाम + ईषत्हास्यनाम
त्थाकारगुप्तिः समौ संवेगसंभ्रमौ ॥ स्यादाच्छुरितकं हास-
सोत्प्रासः स मनाक्स्मितम् ॥ ९ ॥ मध्यमः स्याद्विहसितं
रोमहर्षनाम + रोदितनाम जंभुहावनाम
रोमांचो रोमहर्षणम् ॥ क्रंदितं रुदितं क्रुष्टं जृम्भस्तु त्रिषु
मिथ्या वचननाम + धर्मादिचलननाम
जृम्भणम् ॥ १० ॥ विप्रलंभो विसंवादो रिङ्गणं स्खलनं स-
+ निद्रानाम + अत्यंत
मे ॥ स्यान्निद्रा शयनं स्वापः स्वप्नः संवेश इत्यपि ॥ ११ ॥ तं-
श्रमनाम + सर्वइंद्रियसामर्थ्यनाम + क्रूरदृष्टिनाम
द्री प्रमीला भ्रुकुटिः भ्रूकुटिर्भृकुटिः स्त्रियाम् ॥ अदृष्टिः ।
+ स्वभावनाम
स्यादसौम्येऽक्षिसंसिद्धिप्रकृती त्विमे ॥ १२ ॥ स्वरूपं च
+ कंपनाम + उत्सवनाम
स्वभावश्च निसर्गश्चाथ वेपथुः ॥ कम्पोऽथ क्षण उद्धर्षो म-
+ पातालनाम
ह उद्धव उत्सवः ॥ १३ ॥ इति नाट्यवर्गः ॥ अधोभुवनपाता-
+ विवरमात्रनाम
लं बलिसद्म रसातलम् ॥ नागलोकोऽथ कुहरं सुषिरं विव-

+ छिद्रनाम
गं बिलम् ॥१॥ छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा सुषिः ॥ ग
भुविस्वभ्रे गर्तं चरो नाम + संरंध्र सुषिरनाम + अंधकारनाम
र्तावटौ भुवि श्वभ्रे सरन्ध्रे सुषिरं त्रिषु ॥२॥ अन्धकारोऽस्त्रियां
ध्वान्तं तमिस्रं तिमिरं तमः ॥ ध्वान्ते गाढेऽन्धतमसं क्षीणेऽव
+ व्यापक सर्वत्र अंधकारनाम + नागराजनाम
तमसं तमः ॥३॥ विष्वक्संतमसं नागाः काद्रवेयास्तदी-
श्वराः ॥ शेषोऽनन्तो वासुकिस्तु सर्पराजोऽथ गोनसे ॥४
+ अजगरनाम + जलसर्पनाम
तिलित्सः स्यादजगरे शयुर्वाहस इत्युभौ ॥ अलगर्दो ज-
+ नेत्रप्रस्य द्विमुखनाम
लव्यालः समौ राजिलदुण्डुभौ ॥५॥ मालुधानो मातु
+ चित्रकारसर्पनाम
लाहिर्निर्मुक्तो मुक्तकंचुकः ॥ सर्पः पृदाकुर्भुजगो भुजं-
+ सर्पविषधरनाम
गोऽहिर्भुजंगमः ॥६॥ आशीविषो विषधरश्चक्री व्याल
सरीसृपः ॥ कुंडली गूढपाच्चक्षुःश्रवाः काकोदरः फणी ॥
७॥ दर्वीकरो दीर्घपृष्ठो दंदशूको बिलेशयः ॥ उरगः पन्नगो
+ सर्पफणानाम
भोगी जिह्मगः पवनाशनः ॥८॥ त्रिष्वाहेयं विषास्थ्यादि
+ सर्पत्वचानाम
स्फुटायां तु फणा द्वयोः ॥ समौ कंचुकनिर्मोकौ क्ष्वेडस्तु
+ काकोल काल कूट हलाहलनाम
गरलं विषं ॥९॥ पुंसि क्लीबे च काकोलकालकूटहलाह-
लाः ॥१०॥ सौराष्ट्रिकः शौल्किकेयो ब्रह्मपुत्रः प्रतापनः
+ विषभेदनाम
११॥ दारदो वत्सनाभश्च विषभेदा अमी नव ॥ विषवैद्यो।
+ विषवैद्यनाम
जाङ्गुलिको व्यालग्राही हितुंडिकः ॥१२॥ इति पाताल।

+ नरकनाम

भोगिवर्गः॥ स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रिया-

+ नरकभेदनाम

म्॥ तद्भेदास्तपनावीचिमहारौरवरौरवाः॥१॥ संहारः

+ प्रेतनद्या वैतरणी नाम

कालसूत्रं चेत्याद्याः सत्त्वास्तु नारकाः॥ प्रेता वैतरणी सिं-

+ अलक्ष्मीप्रसिद्ध नाम

धुः स्यादलक्ष्मीस्तु निर्ऋतिः॥२॥ विष्टिराजूः कारणा-

+ सामान्यदुःखनाम

तु यातना तीव्रवेदना॥ पीडा बाधा व्यथा दुःख ममान-

स्यं प्रसूतिजम्॥३॥ स्यात्कष्टं कृच्छ्रमाभीलं त्रिष्वेषां भे-

+ समुद्रनाम

द्यगामि यत्॥ इति नरकवर्गः॥ समुद्रोऽब्धिरकूपारः पारावा-

रः सरित्पतिः॥ उदन्वानुदधिः सिंधुः सरस्वान्सागरोऽर्ण-

+ समुद्र भेदनाम

वः॥१॥ रत्नाकरो जलनिधिर्यादःपतिरपांपतिः॥ त-

+ जलनाम

स्य प्रभेदाः क्षीरोदो लवणोदस्तथापरे॥२॥ आपः स्त्री भू-

म्नि वार्वारि सलिलं कमलं जलं॥ पयः कीलालममृतं

जीवनं भुवनं वनम्॥३॥ कबंधमुदकं पाथः पुष्करं सर्व-

तोमुखम्॥ अंभोर्णस्तोयपानीयनीरक्षीरांबु शंबरम्॥

+ जलविकारनाम + तरंगनाम

४॥ मेघपुष्पं घनरसस्त्रिषु द्वे आप्यमम्मयम्॥ भंगस्त-

+ महातरंगनाम

रंग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु॥५॥ महत्सूल्लोलक-

+ चक्राकारस्य नाम + जलकणनाम

ल्लोलौ स्यादावर्तोऽम्भसां भ्रमः॥ पृषन्ति बिंदुपृषताः पु-

+ चक्राकारेण जलवहनाम

मांसो विप्रुषः स्त्रियः॥६॥ चक्राणि पुटभेदाः स्युर्भ्रमा-

श्च जलनिर्गमः॥ कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु॥७॥
+ यथाक्रम परकला अरकूलनाम + टापूनाम
पारावारे परार्वाची तीरे पात्रं तदन्तरं॥ द्वीपोऽस्त्रियामन्तरीपं
+ पुलिननाम + यथाक्रम बा
यदन्तर्वारिणस्तटम्॥८॥ तोयोत्थितं तत्पुलिनं सैकतं सि
कलावरकूलनाम + जलमलनाम + कीचनाम
कतामयं॥ निषद्वरस्तु जम्बालः पंकोऽस्त्री शादकर्दमौ॥
+ प्रवाहनाम
९॥ जलोच्छ्वासाः परीवाहाः कूपकास्तु विदारकाः॥ ना-
+ नौकानाम + धननाम
व्यं त्रिलिङ्गं नौतार्यं स्त्रियां नौस्तरणिस्तरिः॥१०॥ उडुपं
+ त्रोतो दु सरणनाम + नयादितरणादेयस्यनाम
तु प्लवः कोलः स्रोतोऽम्बुसरणं स्वतः॥ आतरस्तरपण्यं स्या
+ हेकाष्ठादिक नौका नाम + वहिवगातिनी वणिग नाम + विवरनाम
द्द्रोणी काष्ठाम्बुवाहिनी॥११॥ सांयात्रिकः पोतवणिक् क-
+ गुणवृक्षोपरिस्थितिनाम
र्णधारस्तु नाविकः॥ नियामकाः पोतवाहाः कूपको गुण
+ यत्य रज्जु बंधन काष्ठ नाम
वृक्षकः॥१२॥ नौकादण्डः क्षिपणी स्यादरित्रं केनिपातकः॥
+ पोतादे मल यकुथ नाधे काष्ठादि रचित कुदाल नाम + नौकादि बल्ली
अभ्रिः स्त्री काष्ठकुद्दालः सेकपात्रं तु सेचनम्॥१३॥ क्लीबे-
कृतकाष्ठनाम + निर्मल जल नाम
ऽर्धनावं नावोऽर्धे ऽतीतनौकेऽतिनु त्रिषु॥ त्रिष्वागाधात्प्रस-
+ मलिन जलनाम + अति गंभीर जलनाम + अतिनिम्न
न्नोऽच्छः कलुषोऽनच्छ आविलः॥१४॥ निम्नं गभीरं गंभीरमुत्ता
जलनाम + जलनाम + कैवर्त्तनाम
नं तद्विपर्यये॥ अगाधमतलस्पर्शे कैवर्ते दासधीवरौ॥१५
+ मत्स्य स्थापन पात्र नाम + मत्स्य नाम
आनायः पुंसि जालं स्याच्छणसूत्रं पवित्रकम्॥ मत्स्या।
+ मत्स्य जालक नाम
धानी कुवेणी स्याद्बडिशं मत्स्यवेधनम्॥१६॥ पृथुरोमा
झषो मत्स्यो मीनो वैसारिणोऽण्डजः॥ विसारः शकुली चा-

+ मगरमत्स्य नाम + जलचारिका मत्स्य नाम

थगंडूकः शकुलार्भकः ॥१७॥ सहस्रदंष्ट्रः पाठीन उलूपी

शिशुकः समौ ॥ नलमीनश्चिलिचिमः प्रोष्ठी तु शफरी द्व-

+ क्षुद्रमत्स्यनाम + रोहितमत्स्यनाम

योः ॥१८॥ क्षुद्रांडं मत्स्यसंघातः पोताधानमथो झषाः

+ महामत्स्य नाम

रोहितो मद्गुरः शालो राजीवः शकुलस्तिमिः ॥१९॥ ति

+ जलजंतु नाम + जलजंतु विशेषक नाम

मिंगिलादयश्चाथ यादांसि जलजंतवः ॥ तद्भेदाः शि-

+ करकटा नाम

शुमारोद्रशंकवो मकरादयः ॥२०॥ स्यात्कुलीरः कर्क-

+ ग्राह नाम + मेडुवा नाम

टकः कूर्मे कमठकच्छपौ ॥ ग्राहोवहारो नक्रस्तु कुंभीरो-

+ गोहुआ नाम + गोह नाम

थ महीलता ॥२१॥ गंडूपदः किंचुलुको निहाका गोधि-

+ कुंभीरमत्स्य नाम

का समे ॥ रक्तपा तु जलौकायां स्त्रियां भूम्नि जलौकसः ॥

+ सीप नाम + शंख नाम

२२॥ मुक्तास्फोटः स्त्रियां शुक्तिः शंखः स्यात्कंबुरस्त्रियौ ॥

+ सामान्य जलसक्ती नाम + मेडुक नाम

क्षुद्रशंखाः शंखनखाः शंबूकाः जलशुक्तयः ॥२३॥ भे-

+ मेडुकी नाम

के मंडूकवर्षाभूशालूरप्लवदर्दुराः ॥ शिली गंडूपदी भेकी

+ किंचलिके ... नाम + मुगुरभार्या नाम + जिन्ना ... मिनि नाम

वर्षाभ्वी कमठी दुली ॥ मद्गुरस्य प्रिया शृंगी दुर्नामा दीर्घ-

+ छिन्नामित नाम जलधार नाम + जलसर्प जलाशय नाम

कोशिका ॥ जलाशयो जलाधारस्तत्रागाधजलो ह्रदः ॥

+ कूपसमीप जल नाम + कूप नाम

२५॥ आहावस्तु निपानं स्यादुपकूपजलाशये ॥ पुंस्येवां-

+ कूपपरिस्थित पटे पत्ति नाम

धुः प्रहिः कूप उदपानं तु पुंसि वा ॥२६॥ नेमिस्त्रिकास्य वी-

+ तलाउ नाम +

नाहो मुखबंधनमस्य यत् ॥ पुष्करिण्यां तु खातं स्यादखा-

खातखातजलनाम + नयगम्भागाधजलाशयनाम + कृत्रिमपद्माकरनाम

तं देवखातकं ॥ २७ ॥ पद्माकरस्तडागोस्त्री कासारः सर-

+ अल्पसरसनाम + दीर्घसरनाम

सीसरः ॥ वेशंतः पल्वलं चाल्पसरो वापी तु दीर्घिका ॥ २८ ॥

+ राज धान्यादिवेष्टनाम + वृक्षसेचनार्थ तरुतल

खेयं तु परिखा धारस्त्वंभसां यत्र धारणम् ॥ स्यादालवा-

स्थलनिनाम + अष्टौ गंगानाम

लमावालमावापोथ नदी सरित् ॥ २९ ॥ तरंगिणी शैव-

लिनी तटिनी ह्रदिनी धुनी ॥ स्रोतस्वती द्वीपवती स्रवंती

+ अष्टौ गंगानाम

निम्नगापगा ॥ ३० ॥ गंगा विष्णुपदी जन्हुतनया सुरनिम्न-

गा ॥ भागीरथी त्रिपथगा त्रिस्रोता भीष्मसूरपि ॥ ३१ ॥

+ यमुनानाम + नर्मदानाम

कालिंदी सूर्यतनया यमुना शमनस्वसा ॥ रेवा तु नर्मदा

+ करतोयाख्यानाम +

सोमोद्भवा मेकलकन्यका ॥ ३२ ॥ करतोया सदानीरा बा-

बाहुदाख्यानद्यानाम + शतद्रूनाम + विपाशानद्यानाम

हुदा सैतवाहिनी ॥ शतद्रुस्तु शतद्रुः स्याद्विपाशा तु विपा-

+ शोणनदनाम + कृत्रिमस्वल्पानद्यानाम

ट् स्त्रियाम् ॥ शोणो हिरण्यवाहः स्यात्कुल्याल्पा कृत्रि-

+ नदीनाम सरस्वतिनाम + असिक्नीनदनाम

मा सरित् ॥ शरावती वेत्रवती चंद्रभागा सरस्वती ॥ ३४ ॥

कावेरी सरितोन्याश्च संभेदः सिंधुसंगमः ॥ द्वयोः प्रणाली-

पयसां पदव्यां त्रिषु तूत्तरौ ॥ ३५ ॥ देविकायां सरय्वां च भवे

+ रक्तोत्पलनाम सौगंधिककंदसालूनाम

दाविकसारवौ ॥ सौगंधिकं तु कल्हारं हल्लकं रक्तसंध्य-

+ उत्पलाख्यकमलनाम नीलकमलनाम

कं ॥ ३६ ॥ स्यादुत्पलं कुवलयमथ नीलांबुजन्म च ॥ इंदीव

+ शुक्लकमलनाम + पि... लिनीनाम

रं च नीलेस्मिन् सिते कुमुदकैरवे ॥ शा... तु ... सेष

स्याद्वालिपर्णी तु कुंभिका ॥३७॥ जलनीली तु शैवालं शै
वलोऽथ कुमुद्वती ॥३८॥ कुमुदिन्यां नलिन्यां तु बिसिनीप
द्मिनीमुखाः ॥ वा पुंसि पद्मं नलिनमरविंदं महोत्पलं ॥
३९॥ सहस्रपत्रं कमलं शतपत्रं कुशेशयम् ॥ पंकेरुहं ता
मरसं सारसं सरसीरुहं ॥४०॥ बिसप्रसूनराजीवपुष्क-
रांभोरुहाणि च ॥ पुंडरीकं सितांभोजमथ रक्तसरोरु-
हे ॥४१॥ रक्तोत्पलं कोकनदं नालो नालमथास्त्रियां ॥ मृ
णालं बिसमब्जादिकदंबे खंडमस्त्रियाम् ॥४२॥ करहा-
टः शिफाकंदः किंजल्कः केसरोऽस्त्रियाम् ॥ संवर्तिका न
वदलं बीजकोशो वराटकः ॥४३॥ इति वारिवर्गः ॥ उक्तं
स्वर्व्योमदिक्कालधीशब्दादि सनाट्यकम् ॥ पातालभो
गिनरकं वारि चैषां च संगतं ॥४४॥ इत्यमरसिंहकृतौ
नामलिंगानुशासने स्वर्गादिकाण्डः प्रथमः सांग एव
समर्थितः ॥ शुभमस्तु ॥ ॥ श्रीरस्तु ॥ ॥ कल्याणमस्तु ॥